प्रतिषेधयेत् ।[१] तत्र यो निर्मितकः पुरुषः प्रतिषिध्यते स शून्यः यः प्रतिषेधयति सोपि [शून्यः। योऽपि] माया[२]पुरुषः [प्रतिषिध्यते सोऽपि शून्यः यः प्रतिषेध्यः सोऽपि शून्यः। मायापुरुषो यः प्रतिषेध्यः सोऽपि शून्यः। यः प्रतिषेधः सोऽपि] शून्य एवमेव मद्वचनेन शून्येन सर्वभावानां [सर्वभावस्वभावशून्येन] स्वभावप्रतिषेध उपपन्नः ॥(२३)

## (२) न प्रतिज्ञाहानिः

तत्र यद् भवतोक्तं[5]। शून्यत्व[ात्] त्वद्वचनस्य सर्वभावस्वभावप्रतिषेधो नोपपन्न इति(।) तन्न। [तत्र यः] षट्कोटिको वाद उक्तः स एवं प्रतिसि(?षि)द्धः(।) नैव ह्येवं सति न सर्वभावान्तर्गतं[३] मद्वचनं नास्ति शून्यं नापि सर्वभावा ऽ[?अ]शून्याः।

यत् पुनर्भवतोक्तम्(।)

अथ सस्वभावमेतद् वाक्यं पूर्वा हता प्रतिज्ञा ते (।)
वैषमिकत्वं तस्मिन् विशेषहेतुश्च वक्तव्य(२।)

इत्यत्रापि ब्रूमः।

**न स्वाभाविकमेतद् वाक्यं तस्मान्न वादहानिर्मे।**
**नास्ति च वैषमिकत्वं विशेषहे[6]तुश्च न निग[ा]द्यः॥ (२४)**

न तावन्मम वचनं प्रतीत्यसमुत्पन्नत्वात् स्वभावोपपन्नं (।) यथा पूर्वमुक्तं। स्वभावानुपपन्नत्वात् शून्यं। यस्माच्च इदमपि मद्वचनं शून्यं शेषाऽ(?अ)पि सर्वभावाः शून्यास्तस्मान्नास्ति वैषमिकत्वं। यदि हि वयं ब्रूमः। इदम्वचनमशून्यं शेषाः सर्वभावा : शून्या इति (।) ततो वैषमिकत्वं स्यात् (।) न चैतदेवं (।) तस्मान्न वैषमिकत्वं। यस्माच्च वैषमिकत्वं न संभवति इदम्वचनमशून्यं [7] शेषाः पुनः सर्वभावाः शून्या इति। तस्मादस्माभिर्विशेषहेतुरपि न वक्तव्यः अनेन [हेतुना] इदम्वचनमशून्यं सर्वभावा(:)पुनः शून्या इति ।(२४)

तत्र यद् भवतोक्तं (।) वादहानिस्ते वैषमिकत्वं च विशेषहेतुश्च त्वया वक्तव्य इति (।) तन्न।

---

[१] VT. **यथा निर्मितकः पुरुषः निर्मितकं पुरुषं कस्मिंश्चिदर्थे वर्त्तमानं प्रतिषेधयेत्; मायाकारेण च सृष्टो मायापुरुषो मायापुरुषं कस्मिंश्चिदर्थे वर्तमानं प्रतिषेधयेत्।** [२] VT. Omits. [३] VT. **सर्वान्तर्गतं।**

यत् पुनर्भवतोक्तं।

मा शब्दवदित्येतत् स्यात् ते बुद्धिर्न चैतदुपपन्नं।

शब्देन ह्यत्र सता भविष्यतो वारणं तस्येति।(३)

अत्र ब्रूमः।

**मा शब्दवदिति नायं दृष्टान्तो यस्त्वया समारब्धः (।)** 4a

**शब्देन ⁸ हि तच्च शब्दस्य वारणं नैव मे वचः[१]। (२५)**

नाप्ययमस्माकं दृष्टान्तः। यथा कश्चित् मा शब्दं कार्षीरिति ब्रुवं शब्दमेव करोति शब्दञ्च प्रतिषेधयति। यद्वत् शून्येन वचनेन शून्यतां [न] प्रतिषेधयति। किं कारणं। अत्र हि दृष्टान्ते शब्देन शब्दस्य व्यावर्तनं क्रियते। न चैतदेवं (।) वयं ब्रूमः। निःस्वभावाः सर्वभावाः निःस्वभावत्वात् तदशून्यमिति[२] (२५)।

किं कारणं(।)

**नैःस्व(ा)भाव्यानां चेन्नैःस्वभा[1]व्येन वारणं यदि हि[३] (।)**

**नैःस्वभाव्यनिवृत्तौ स्वाभाव्यं हि प्रसिद्धं स्यात्।(२६)**

यथा मा शब्दमिति शब्देन शब्दस्य व्यावर्तनं क्रियते। एवं यदि नैःस्वभाव्ये-[न] वचनेन[४] नैःस्वभाव्यानां व्यावर्तनं क्रियते ततोयं दृष्टान्तोपपन्नं [? न्त उपपन्नः]स्यात्। इह तु नैःस्वाभाव्येन वचनेन भावानां स्वभावप्रतिषेधः क्रियते। एवं यदि नैःस्वभाव्येन वचनेन निःस्वभावानां नैःस्वभाव्यप्रतिषेधः क्रियते। नैःस्व-[ा] भाव्यप्रतिषेधादेव [भावाः] सस्वभावा भवेथ्युः। सस्वभावत्वादशून्याः स्युः। शून्यताञ्च वयं भावानामाचक्ष्महे नाशून्यतामित्यदृष्टान्त एवायमिति।(२६)

**अथवा निर्मितकायां यथा स्त्रियां स्त्रियमित्यसंङ्ग्राहं।**

**निर्मितकः प्रतिहन्यात् कस्यचिदेवं भवेदेतत्।(२७)**

अथवा कस्यचित् पुरुषस्य निर्मितकायां स्त्रियां स्वभावशून्यायां परमार्थतः स्त्रियमित्यसङ्ग्र[ा]हः स्यादेवं तस्यां[५] तेनासङ्ग्राहेण रागमुत्पादयेत् । तत् यथा[६] तथागतेन वा तच्छ्रावकेण[3] वा निर्मितको निर्मितः स्यात्। तथागताधिष्ठानेन

---

[१] In the Commentary of verse २८—"शब्देन ह्यत्र सता भविष्यतो वारणं तस्य।"

[२] तच्छून्यमिति। [३] VT. यथा क्रियते।

[४] VT. भाव०  [५] VT. तस्मात्

[६] VT. Omits.

वा तथागत स्रा(?श्रा)वकाधिष्ठानेन[१] वा तस्य तमसङ्ग्रहं विनिवर्तयेत्। एवमेव निर्मितकोपमेन [ मदीयेन ] शून्येन वचनेन निर्मितकस्त्रीस(ा)दृश्येषु [ सर्वभाव- ] निःस्वभावेषु योयं स्वभावग्राहः स निवर्त्यते स प्रतिषिध्यते। तस्मादयमत्र दृष्टान्तः शून्यताप्रसाधनं प्रत्युपपद्यमानो नेतरः।(२७)

**अथवा साध्यसमोयं हेतुर्न हि विद्यते ध्वनेः सत्ता।**
**संव्यवहारञ्च वयं नानभ्यु[4]पगम्य कथयामः।(२८)**

मा शब्दवदिति साध्यसम एवायं हेतुः। कस्मात्(।) सर्वभावानां नैःस्वभाव्ये-नाविशिष्टत्वात्। न हि तस्य ध्वनेः प्रतीत्यसमुत्पन्नत्वात् स्वभवं (?भाव)सत्ता विद्यते। तस्या(:) स्वभावसत्तायाः अविद्यमानत्वात्।

यदुक्तं (।) "शब्देन ह्यत्र सता भविष्यतो वारणं तस्ये"ति (२५)। तद् व्याहन्यते। अपि च(।)न वयं व्यवहारसत्यं प्रत्याख्याय व्यवहारसत्यमनभ्युपगम्य कथयामः। शून्याः सर्वभावा इति। न हि[5] व्यवहारसत्यमनागम्य शक्या धर्मदेशना कर्तुं। यथोक्तं (।)

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यत इति।

तस्मात् मद्वचनवत् शून्या [ : ] सर्वभावाः सर्वभावानाञ्च निःस्वभावत्वमुभय-थोपपद्यमानमिति॥(२८)

यत्पुनर्भवतोक्तं।[२]

प्रतिषेधः प्रतिषेध्योप्येवमिति मतं भवेत् तदसदेव।
एवं तव प्रतिज्ञा लक्षणतो दूष्यते न ममेति। (४)

अत्र ब्रूमः।

**यदि काचन प्रतिज्ञा तत्र स्यात् एष मे भवेद् दोषः।**
**नास्ति च मम प्रतिज्ञा तस्मान्नैवास्ति मे दोषः (२९)**

यदि च काचित् मम प्रतिज्ञा स्यात् ततो मम प्रतिज्ञालक्षणप्राप्तत्वात् स पूर्वको दोषः। यथा त्वयोक्तं भावाः (?त्वयोक्तः) तथा मम स्यात् (।) न मम काचिदस्ति प्रतिज्ञा। तस्मात् सर्वभावेषु शून्येष्वत्यन्तोपशान्तेषु प्रकृतिवि-

---

[१] VT. Omits तथागताधिष्ठानेन ० श्रावकाधिष्ठानेन।
[२] VT. Omits यत्

विक्तेषु कुतः [ प्रतिज्ञा । कुतः ] प्रतिज्ञालक्षणप्राप्तिः (।) कुतः प्रतिज्ञालक्षणता (?) प्राप्तिकृतो दोषः । (२९)

## (३) प्रमाणसिद्धिः

### (क) न परतः प्रमाणसिद्धिः

तत्र यत् भवतोक्तं प्रतिज्ञालक्षणप्राप्तत्वात् तवैव[7] दोष इति तन्नास्ति।
यत्पुनर्भवतोक्तं (।)
प्रत्यक्षेण हि तावत् यद्युपलभ्य नि वर्तयसि भावान् (।)
तन्नास्ति प्रत्यक्षं भावा येनोपलभ्यंते। (५)
अनुमानं प्रत्युक्तं प्रत्यक्षेणागमोपमाने च (।)
अनुमानागमसाध्या येर्था दृष्टान्तसाध्याश्चेति। (६)

अत्र वयं ब्रूमः ।

**यदि किञ्चिदुपलभेयं प्रवर्तयेयं निवर्तयेयम्वा (।)**
**प्रत्यक्षादिभिरर्थैस्तदभावान्मेनुपालम्भः। (३०)**

यद्यहं किञ्चिदर्थमुपलभेयं प्रत्यक्षानुमानोप[ मानागमैः च ] [8]तुर्भिः प्रमाणै 4b (:) चतुर्णाम्वा प्रमाणानां अन्यतमान्यतमेन। अत एवं प्रवर्तयेयम्वा [ निवर्त्तयेयं वा। ] अर्थमेवाहं किञ्चिन्नोपलभते (?भे) तस्मान्न प्रवर्तयामि न निवर्तयामि। तत्रैवं सति यो भवतोपालम्भोक्तः (? म्भ उक्तः)। यदि प्रत्यक्षादीनां प्रमाणानामन्यतमेन उपलभ्य भावान् विनिवर्तयसीति।

ननु भवतोक्ता[१] निप्रमाणानि न सन्ति [ तानि ] तैश्च प्रमाणैरपि गम्या- [अ]र्था इति [ यो दोष उक्तः ] स मे भवत्येवानुपालम्भ [ : ।[1] (३०)

किञ्चान्यत् । ]

**यदि च प्रमाणतस्तेषां तेषां प्रसिद्धिरर्थानां।**
**तेषां पुनः प्रसिद्धिं ब्रूहि कथं तेषां (?ते) प्रमाणानां। (३१)**

प्रसिद्धिरिति (।)

यदि च प्रमाणतस्तेषां (?) तेषामर्थानां प्रमेयानां (?णां) सिद्धिं मन्यसे यथा मानैर्मेयानां। तथा[२] तेषामिदानीं प्रत्यक्षानुमानोपमानागमानां चतुर्णां प्रमाणानां

---

[१] VT. Omits **ननु भवतोक्तानि।**  [२] VT. **अथ**

कुतः प्रसिद्धिः। यदि तावन्निःप्रमाणानां प्रमाणं स्यात् नादेः सिद्धिस्तत्रास्ति नैव मध्यस्य नान्तस्य।[१] यदि पुनः मन्यसे प्रमाणैः प्र[4]सिद्धिः[२] प्रमाणतोऽर्थानां प्रसिद्धिरिति हीयते प्रतिज्ञा। तथापि[३] (।३१)

**अन्यैः यदि प्रमाणैः प्रमाणसिद्धिर्भवत्यनवस्था।**
**नादेः सिद्धिस्तत्रास्ति नैव मध्यस्य नान्तस्य।(३२)**

यदि पुनर्मन्यसे। प्रमाणैः प्रमेयाणां प्रसिद्धिस्तेषां प्रमाणानामन्यैः प्रमाणैः प्रसिद्धिरनवस्थाप्रसङ्गः। अनवस्थाप्रसङ्गै(? ङ्गे)को दोषः।

नादेः सिद्धिस्तत्रास्ति नैव मध्यस्य नान्तस्य।

अस्यानवस्थाप्रसङ्गे आदेः सिद्धिर्नास्ति। किं कारणं(।) तेषाम[3]पि हि प्रमाणानामन्यैः प्रमाणैः [प्र]सिद्धिस्तेषामन्यै[रिव तेषामप्यन्यै]रिति नास्त्यादिः। आदेरसद्भावात् कुतो मध्यं कुतो [?तः] अन्तः। तस्मात् तेषां प्रमाणानामन्यैः प्रमाणैः प्रसिद्धिः [इति यदुक्तं तत्] नोपपद्यतेति [?त इति]।(३२)

**तेषामथ प्रमाणैर्विना प्रसिद्धिः विहीयते वादः।**
**वैषमिकत्वं तस्मिन् विशेषहेतुश्च वक्तव्यः।(३३)**

अथ मन्यसे(—)तेषां प्रमाणानां विना प्रमाणैः प्रसिद्धिः प्रमेयानां पुनरर्थानां प्रमाणैः प्रसिद्धिरिति। एवं सति यस्ते वादः(—)प्रमाणैः[4] प्रसिद्धिरर्थानामिति हीयते (।)वैषमिकत्वञ्च भवति।(—)केषाञ्चित् अर्थानां प्रमाणैः प्रसिद्धिः केषाञ्चिन्नेति(।)विशेषहेतुश्च वक्तव्यः येन हेतुना केषांचिदर्थानां प्रमाणैः प्रसिद्धिः केषाञ्चिन्नेति। सा च नोपदिष्टा(।) तस्मादियमपि[४] कल्पना नोपपन्नेति।(३३)

## (ख) नाऽग्निवत् स्वतः

अत्राह। प्रमाणान्येव मम स्वात्मानं परात्मानञ्च प्रसाधयन्ति।[५] यथोक्तं।

**द्योतयति स्वात्मानं यथा हुतास(?श)ः तथा परात्मानं।**
**स्वपरात्मानावेवं प्रसाधय[5]न्ति प्रमाणानि।(३४)**

---

[१] VT. Omits यदि ० नान्तस्य [२] VT. यद्यन्यैः प्रमाणैरपि प्रमाण(प्र)सिद्धिः [३] VT. अथापि
[४] VT. नियङ =?ऽदि यङ
[५] VT. Omits प्रमा ० प्रसाधयन्ति

[1]परमिव [2]स्वात्मानं परात्मानञ्चेति ॥ (३४)

अत्रोच्यते ।

**विषमोपन्यासोयं न ह्यात्मानं प्रकाशयत्यग्निः ।**
**न हि तस्यानुपलब्धिः दृष्टा तमसीव कुम्भस्य । (३५)**

विषम एवायमुपन्यासः । अग्निवत् प्रमाणानि स्वात्मानञ्च प्रसाधयन्ति परात्मानञ्च प्रसाधयन्तीति । न ह्यग्निरात्मानं प्रकाशयति । यदि हि[3] यथा प्रागेवाग्निना अप्रकाशितस्तमसि कुम्भो नोपलभ्यते । अथोत्तरकालमुपलभ्यतेऽग्निना प्रकाशितः सन्[6] (।) एवमेव यद्यग्निना न प्रकाशितः प्रागग्निर्नः [?तमसि] स्यादुत्तरकालमग्नेः प्रकाशनं स्यात् । अतः स्वात्मानं प्रकाशयेन्नैतदेवं । तस्मादियमपि कल्पना नोपपद्यन्ते (?त इ) ति । (३५)

किञ्चान्यत् ।

**यदि स्वात्मानमयं त्वद्वचनेन प्रकाशयत्यग्निः ।**
**परमिव न त्वात्मानं परिधक्ष्यत्यपि हुताशः । (३६)**

यदि च त्वद्वचनेन यथा परात्मानं प्रकाशयत्यग्निः एवमेव स्वात्मानमपि प्रकाशयत्यग्निरिति । ननु यथा परात्मानं दहति एवमेव स्वात्मान[7]मपि धक्ष्यतीति । न चैतदेवं । (३६)

तत्र यदुक्तं (।) परात्मानमिव स्वात्मानं प्रकाशयत्यग्निरिति (।) तन्न ॥

किञ्चान्यत् ।

**यदि च स्वपरात्मानौ त्वद्वचनेन प्रकाशयत्यग्निः ।**
**प्रच्छादयिष्यति तमः स्वपरात्मानौ हुताश इव । (३७)**

यदि च भवतो मतेन स्वात्मपरात्मानौ प्रकाशयत्यग्निः । नन्विदानीं प्रतिपक्षभूततमोपि स्वात्मपरात्मानौ छादयेत् । नैतदिष्टं ।[4] (३७)

तत्र यदुक्तं स्वपरात्मानौ प्रकाशयत्यग्निरिति (।) तन्न ॥

किञ्चान्यत् (।)[8]

---

[1] VT. Adds—**इत्युपदेशवत् प्रमाणान्येव स्वात्मानं परात्मानञ्च प्रसाधयन्ति । यथाऽग्निः स्वात्मानं परात्मानञ्च प्रसाधयति, एवं प्रमाणान्यपि ।**

[2] VT. Omits—**परमिव ।**  [3] VT. Omits—**यदि हि**

[4] VT. **ननु तत्प्रतिपक्षभूतोपि स्वपरात्मानौ छादयेत् । नैतदेवम् ।**

5a **नास्ति तमश्च ज्वलने यत्र च तिष्ठति सदात्मनि ज्वलनः।**
**कुरुते कथं प्रकाशं स हि प्रकासोअ(?शो)न्धकारबधः।(३८)**

इह चाग्नौ नास्ति तमः। नापि च यत्राग्निस्तत्रास्ति तमः। प्रकाशश्च नाम तमसः प्रतिघात[: तस्मादग्नावपि नास्ति तमः। यत्राग्निस्तत्राऽपि नास्ति तमः।] तत्र कथमस्य[१] तमसः प्रतिघ(ा)तमग्निः करोति। यस्य प्रतिघातात् स्वपरात्मानौ प्रकाशयतीति। आह। यत्[२] यस्मादेवं[३] नाग्नौ तमोस्ति। नापि यत्राग्निस्तत्र तमोस्ति।[1] यस्मादेवं स्वपरात्म(ा)नौ न प्रकाशयत्यग्निः। तेन ह्युत्पद्यमाने-नैवाग्निना तमसः प्रतिग्रहः कुतः। (।) तस्मान्नाग्नौ[४] तमोऽस्ति। नापि यत्राग्निः तत्र तमोस्ति। यस्मादु[५]त्पद्यमान एवोभयं प्रकाशयत्यग्निः स्वात्मानं परात्मानञ्चेति।(३८)

अत्रोच्यते।

**उत्पद्यमान एव प्रकाशयत्यग्निरित्यसद्वादः।**
**उत्पद्यमान एव प्राप्नोति तमो न हि हुताशः।(३९)**

अयमग्निरुत्पद्यमान एव प्रकाशयति स्वात्मानं[2] परात्मानञ्चेति। नायमुप-पद्यते वादः। कस्मात्(।)[६] न ह्युत्पद्यमान एवाग्निः तमः प्राप्नोति। अप्राप्तत्वा न्नैवोपहन्ति। तमसश्चानुपघातान्नास्ति प्रकाशः।(३९)

किञ्चान्यत् (।)

**अप्राप्तोपि ज्वलनो यदि वा पुनरन्धकारमुपहन्यात्।**
**सर्वेषु लोकधातुषु तमोऽयमिह संस्थित उपहन्यात्। (४०)**

अथापि मन्यसे अप्राप्तोप्यग्निरन्धकारमुपहन्तीति। नन्विदानीमिह[७] संस्थितो-ऽग्निः सर्वलोकधातुस्थमुपहनिष्यति तमः तुल्या[3] यामप्राप्तः(।) न चैतदेवं दृष्टं।[८] तस्मादप्राप्येवाग्निरन्धकारमुपहन्तीति[९] यदिष्टं। तन्न।(४०)

---

[१] VT. Omits—तत्र कथं adds. यस्य [२] VT. अथ
[३] VT Omits—एवं [४] VT ० ग्नि। उत्पद्यमानेनैवाग्निना तेन तमसः प्रतिघातः। तत्रावपि न तत् [५] VT. तस्माद्।
[६] VT. repeats twice—अयम ० कस्मात्
[७] VT. ननु सोप्राप्त इव
[८] VT. Omits—दृष्टं
[९] VT. तस्मात्प्राप्याप्राप्याग्नि ० न्तीति

*(ग) न प्रमेयतः प्रमाणसिद्धिः*

**यदि च स्वतः प्रमाणसिद्धिरनपेक्ष्य ते प्रमेयाणि।**
**भवति प्रमाणसिद्धिः न परापेक्षा हि सिद्धिरिति।**[१] **(४१)**

यदि चाग्निवत् स्वतः प्रमाणसिद्धिरिति मन्यसे। अनपेक्ष (?क्ष्य)ापि प्रमेयाणि प्रमाणानां सिद्धिः भविष्यतीति (।) किं कारणं। न हि स्वतः [सिद्धिः] परमपेक्षते। अथापेक्षते न स्वतः प्रसिद्धिः।(४१)

अत्राह। यदि नापेक्ष्यन्ते[4] प्रमेयानर्थान् प्रमाणानि को दोषो भविष्यतीति। अत्रोच्यते।

**अनपेक्ष्य हि प्रमेयानर्थान् यदि ते प्रमाणसिद्धिः भवति।**
**न भवंति कस्यचिदेवमिमानि**[२] **प्रमाणानि।(४२)**

यदि प्रमेयानर्थाननपेक्ष्य सिद्धिर्भवति प्रमाणानामिति। [एवं हि ते] तानीमानि प्रमाणानि न कस्यचित् प्रमाणानि भवन्ति। एवं दोषः॥

अथ कस्यचिद् भवन्ति प्रमाणानि। नैवेदानीमनपेक्ष्य[३][तान्] प्रमेयानर्थान् प्रमाणानि भवन्ति॥(४२)

**अथ मतमपेक्ष (?क्ष्य) सिद्धिस्तेषामिति अ भवतो**[४] **को दोषः।**
**सिद्धस्य साधनं स्यान्नासिद्धोपेक्षते ह्यन्यत् ।(४३)**

अथापि मतम् (।) अपेक्ष्य प्रमेयानर्थान् प्रमाणानां सिद्धिर्भवतीति। एवं हि सति सिद्धस्य प्रमाणचतुष्टयस्य साधनं भवतीति। किं कारणं।[५] न ह्यसिद्धस्यार्थस्यापेक्षणं भवति। न ह्यसिद्धो देवदत्तः कञ्चिदर्थमपेक्षते (।)[६] न च सिद्धस्य साधनमिष्टं कृतस्य कार(?क)रणमनुपपत्तेरिति॥(४३)

किञ्चान्यत्।

**सिध्यन्ति हि प्रमेयाण्यपेक्ष्य यदि सर्वथा प्रमाणा**[6]**नि (।)**
**भवन्ति(?ति)प्रमेयसिद्धिरनपेक्ष्यैव प्रमाणानि।(४४)**

---

[१] VT. ० न परापेक्षात्मसिद्धिः
[२] VT. कस्यचिदेव हीमानि
[३] VT. नैवानपेक्ष्य　[४] VT. तेषामित्यत्र
[५] VT. Omits सिद्धस्य ० कारणं
[६] VT. adds—ते सिद्धस्य प्रमाणचतुष्टयस्य साधनं भवति।

यदि प्रमेयाण्यपेक्ष्य प्रमाणानि सिध्यन्ति । नेदानीं प्रमाणान्यपेक्ष्य प्रमेयाणि सिध्यन्ति (।) किं कारणं (।) न हि साध्यं साधनं साधयति [1] (।) साधनानि च किल प्रमेयाणां प्रमाणानि[१] ॥ (४४)

किञ्चान्यत् ।

**यदि च प्रमेयसिद्धिरनपेक्षै(?क्ष्यै)व भवति प्रमाणानि ।**
**किन्ते प्रमाणसिद्ध्या तानि यदर्थं प्रसिद्धं तत् । (४५)**

यदि च मन्यसेऽनपेक्ष्यैव प्रमाणानि प्रमेयानां (? णां) प्रसिद्धि(र्भवति । किमि)[7]दानीं ते प्रमाणसिद्धचा पर्यन्विष्टया (।) किं कारणं। यदर्थं हि तानि प्रमाणानि पर्यन्विष्येरन् । ते प्रमेयाऽर्था (? या अर्था) विना प्रमाणैः सिद्धाः(।) तत्र किं प्रमाणैः कृत्यं । (४५)

**अथ तु प्रमाणसिद्धिर्भवत्यपेक्ष्यैव ते प्रमेयाणि ।**
**व्यत्यय एवं सति ते ध्रुवं प्रमाणप्रमेयाणां । (४६)**

अथापि मन्यसेऽपेक्ष्यैव प्रमेयानर्थान्(?न्) प्रमाणानि भवन्ति । एवं हि सति

5b मा भूत् पूर्वोक्तदोष इति कृत्वा (।) एवं ते सति व्यत्ययः [प्रमाण]प्रमे [8] याणां भवति। प्रमाणि (?णा)नि ते प्रमेयाणि भवन्ति प्रमेयैः साधितत्वात् । प्रमाणानि च प्रमेयाणि भवन्ति प्रमाणानां साधकत्वात् । (४६)

**अथ ते प्रमाणसिद्धचा प्रमेयसिद्धिः प्रमेयसिद्ध्या च (।)**
**भवति प्रमाणसिद्धिः; नास्त्युभयस्यापि ते सिद्धिः ॥ (४७)**

अथ मन्यसे (।) प्रमाणसिद्ध्या प्रमेयसिद्धिर्भवति प्रमाणापेक्षत्वात् । प्रमेयसिद्ध्या च प्रमाणसिद्धिर्भवति प्रमेयापेक्षत्वादिति ॥ एवं सत्युभयस्यापि सिद्धिर्न [। (४७)

किं कार] णं (।)

**सिध्यन्ति हि प्रमाणैर्यदि प्रमेयाणि तानि तैरेव (।)**
**साध्यानि च प्रमेयैस्तानि कथं साधयिष्यन्ति । (४८)**

यदि हि प्रमाणैः प्रमेयाणि सिध्यन्ति(।) तानि प्रमाणानि तैरेव प्रमेयैः साधयितव्यानि । नन्वसिद्धेषु प्रमेयेषु कारणस्यासिद्धत्वादसिद्धानि कथं साधयिष्यन्ति प्रमेयाणीति । (४८)

---

[१] VT. ० प्रमेयाणि प्रमाणानाम्

**सिध्यन्ति च प्रमेयैः यदि प्रमाणानि तानि तैरेव (।)**
**साध्यानि च प्रमेयैस्तानि कथं साधयिष्यन्ति।(४९)**

यदि [च[ प्रमेयैः प्रमाणानि सिध्यन्ति[1] तानि च प्रमेया[2] णि तैरेव प्रमाणैः साधयितव्यानीति। नन्वसिद्धेषु प्रमाणेषु कारणस्यासिद्धत्वादसिद्धानि कथं साधयिष्यन्ति प्रमाणानि।(४९)

**पित्र(ा) यद्युत्पाद्यः पुत्रो यदि तेन चैव पुत्रेण।**
**उत्पाद्यः स यदि पिता वद तत्रोत्पादयति कः कं।(५०)**

यद्यथापि नाम कश्चित् ब्रूयात्। पित्रा पुत्र उत्पादनीयः स च पिता पुत्रेणोत्पादनीय इति। तत्रेदानीं ब्रूहि केन क उत्पादयितव्यः। तथैव खलु भवान् ब्रवीति। प्रमाणैः प्रमेयानि(?णि) साधयितव्यानि तान्येव[3] च पुनः प्रमाणानि तै प्रमेयैः[2] (।) तत्रेदानीं ते कतमैः कतमानि साधयितव्यानि।(५०)

**कश्च पिता कः पुत्रः, तत्र त्वं ब्रूहि कथं तावुभावपि च।**
**पित्रौ [?पिता] पुत्रलक्षणधरौ यतो न पुत्रसंदेहः।[3] (५१)**

तयोश्च पूर्वोपदिष्टयोः पितापुत्रयोः वद कतरः पुत्रः कतरः पिता (।) उभावपि तावुत्पादकत्वात् पितृलक्षणधरौ। उत्पाद्यत्वाच्च पुत्रलक्षणधरावत्र नः सन्देहो भवति। कतरस्तत्र पिता कतरस्तत्र पुत्र[4] इति। एवमेव यान्येतानि भवति [?तः] प्रमाणप्रमेयाणि। [तेषु] तत्र कतराणि प्रमाणानि कतराणि प्रमेयाणि। उभयान्यपि ह्येतानि [साधनत्वात्] प्रमाणानि तानि प्रमेयाणि[4] साध्यत्वात् प्रमेयाणीति। अत्र न[:] सन्देहो भवति(—)कतराण्यत्र प्रमाणानि कतराणि प्रमेयाणीति।(५१)

## (घ) नाप्यकस्मात् प्रमाणसिद्धिः

**नैव स्वतः प्रसिद्धिर्न परस्परतः प्रमाणैर्वा[5] (।)**
**भवति न च प्रमेयैः न चाप्यकस्मात् प्रमाणानां।[6] (५२)**

---

[1] VT. **यदि च प्रेमयाणि सिध्यन्ति** [2] VT. adds—**साधयितव्यानि**
[3] VT. **ततो नोऽत्र संदेहः**
[4] VT. Omits **तानि प्रमेयाणि**
[5] VT. **परस्परतोऽन्यप्रमाणैर्वा**
[6] VT. ० **न चाप्यकारणं भवति।**

न स्वतः प्रसिद्धिः प्रत्यक्षस्य[5] तेनैव प्रत्यक्षेण(।)अनुमानस्य तेनैवानुमाने (न।) उपमानस(?स्य) तेनैवोपमानेन। आगमस्य तेनैवागमेन। नापि परस्यात्र [?स्परतः।] प्रत्यक्षस्यानुमानोपमानागमैरनुमानस्य प्रत्यक्षोपमानागमैरुपमानस्य प्रत्यक्षानुमानागमैः। आगमस्य प्रत्यक्षानुमानोपमानैः। नापि प्रत्यक्षानुमानोपमानागमादन्यैः[1] प्रत्यक्षानुमानोपमानागमैर्यथास्वं(।) नापि प्रमेयैः समस्त व्यस्तैः [6]स्वविषयपरविष(य)तागृहीतैः[2] नाप्यकस्मान्नास्ति समुच्चयेन। एतेषां कारणानां पूर्वोद्दिष्टानां विंशत्त्रिंशच्चत्वारिंशत् श(?ष)ड्विंशतिर्वा[3] (।५२)

तत्र[4] यदुक्तं। प्रमाणाधिगम्यत्वात् प्रमेयाणां भावानां सन्ति तु प्रमेया भावा(:।) तानि च[5] प्रमाणानि(।) यैस्तु प्रमाणैः प्रमेया भावाः सन्तश्च भावाः[6] समधिगता इति (।) तन्न ॥

## २. भावानां शून्यता युक्ता (ख)

### (१) प्रतीत्यसमुत्पन्नत्वात् कुशलादेः प्रविभागः

यत् पुनर्भवतोक्तं।

कुशलानां धर्माणां धर्मावस्थाविदश्च मन्यन्ते।
कुशलं जनस्वभा[7]वं मन्यन्ते[7] शेषेष्वप्येष विनियोगः। (७)

अत्र ब्रूमः।

**कुशलानां धर्माणां धर्मावस्थ(ा)विदो ब्रुवते यत्।**
6a **कुशलस्वभाव[?वं] एवं प्रविभागेनाभिधेयः स्यात्।(५३)**

कुशलानां धर्माणां धर्मावस्थ(ा)विदः कुशलं जन[8]स्वभावं मन्यन्ते। स च भवता प्रविभागेनोपदेष्टव्यः(—)स्यादयं स कुशलः स्वभावः इमे ते कुशला धर्मा इति। इदं तत् कुशलं विज्ञानमयं कुशलविज्ञानस्वभाव(:।) एवं सर्वेषां (।) न चैतदेवं दृष्टं।[9](५३)

[8]तस्माद् यदुक्तमुपदिष्टः[10] स्वभावो धर्माणामिति(।) तन्न॥

---

[1] VT. ० नागमा अन्यैः [2] VT. स्वपरविषयगृहीतान्ता [3] VT. षट्त्रिंशतिर्वा न सिद्धिः [4] VT. तत्र त्वया [5] VT. adds सन्ति
[6] VT. Omits—सन्तश्च भावा [7] VT. मन्यन्ते is Omitted in the verse 7 [8] VT. Omits जन [9] VT. न तदप्युपदिष्टम्
[10] VT. तस्मात् स्वयं यथा यदुक्तं—उपदिष्टः

किञ्चान्यत्।

**यदि च प्रतीत्य कुशलः स्वभाव उत्पद्यते स कुशलानां (।)**
**धर्माणां परभावः स्वभाव एव कथं भवति।(५४)**

यदि च कुशलानां धर्माणां स्वभावो हेतुप्रत्ययसामग्रीं प्रतीत्योत्पद्यते। [स] परभावादुत्पन्न[१]: कुशलानां धर्माणां कथं स्वभावो भवति। एवमेवाकुशल-प्रभृतीनां।(५४)

तत्र यदुक्तं। कुशलाव्याकृतानां न...... [[२]कुशलानां][1] धर्माणां कुशलः स्वभावो (?व उ)पदिष्टः। एवमकुशलानामकुशलादिरिति। तन्न॥

किञ्चान्यत्।

**अथ न प्रतीत्य किञ्चित् स्वभाव उत्पद्यते स कुशलानां।**
**धर्माणामेवं स्याद् वासो न ब्रह्मचर्यस्य॥(५५)**

अथ मन्यसे। न किञ्चित् प्रतीत्य कुशलानां धर्माणां कुशलस्वभाव उत्पद्यते। एवमकुशलानां धर्माणामकुशलः अव्याकृतानमव्याकृत इति[३]। एवं सत्यब्रह्मचर्य-वासो भवति (।) किं कारणं। प्रतीत्य स[४]मुत्पादस्य हि एवं सति प्रत्याख्यानं भवति। प्रतीत्यसमुत्पादस्य प्रत्याख्यानात् प्रतीत्यसमुत्पाददर्शनं प्रत्याख्यानं (?तं) भवति। न ह्यविद्यमानस्य प्रतीत्यसमुत्पादस्य दर्शनमुपपद्यमानं भवति। असति प्रतीत्यसमुत्पाददर्शने धर्मदर्शनं न भवति। उक्तं हि भगवता (—)"यो हि भिक्षवः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति"। धर्मदर्शनाभावात् ब्रह्मचर्यवासा-भावः।

अथवा (।) प्रतीत्यसमुत्पादप्रत्याख्यानात् दुःखसमुदय[3]प्रत्याख्यानं भवति। प्रतीत्यसमुत्पादो हि दुःखस्य समुदयः। दुःखसमुदयस्य प्रत्याख्यानात् दुःखप्रत्याख्यानं भवति। असति हि समुदये तत् कुतो दुःखं समुदेष्यति। दुःखसमुदयप्रत्याख्यानाच्च दुःखनिरोधस्य प्रत्याख्यानं। असति हि दुःखसमुदये[४] कस्य प्रहाणात् निरोधो भविष्यति। असति हि दुःखनिरोधे कस्य प्राप्तये मार्गो भविष्यति दुःख-निरोधगामी। एवं चतुर्णामार्यसत्यानामभाववच्छ्राम[4]ण्यफलाभावः।[५] सत्यदर्शना-

---

[१] VT. **परभावं प्रतीत्य उत्पन्नः** [२] VT. Omits—**कुशलाव्याकृतानां न.....** [३] VT. **अकुशलादीनामप्येवम्** [४] VT. **असतोर्दुःखसमुदययोः** [५] VT. **एतेन चतुर्णामार्यसत्यानामभावः स्यात्। तदभावाच्छ्रामण्यफलाभावः संप्राप्तः**

दिश्र(ा)मण्यफलानि (अ)धिगम्यन्ते।[१] श्रामण्यफलानामभावादब्रह्मचर्यवास इति॥(५५)

किञ्चान्यत्।

**नाधर्मो धर्मो वा संव्यवहाराश्च लौकिका नि (?न) स्युः।**
**नित्याश्च सर्वभावाः स्युः नित्यत्वादहेतुमतः।(५६)**

एवं सति प्रतीत्यसमुत्पादं प्रत्याचक्षाणस्य भवतः को[२] दोष (:) प्रसज्यते। धर्मो न भवति अधर्मो न भवति। संव्यवहाराश्च लौकिका न सम्भवन्ति। किं कारणं(।) प्रतीत्यसमुत्पन्नं ह्येतत्[५] सर्वमसति प्रतीत्यसमुत्पादे कुतो भविष्यति। अपि च सस्वभावोऽप्रतीत्यसमुत्पन्नो निर्हेतुको नित्यः स्यात्। किं कारणं(।) निर्हेतुका हि भावा नित्यास्तत्र स एव चाब्रह्मचर्यवासः प्रसज्येतु (?त) स्वसिद्धान्तविरोधः[३]। किं कारणम् (।) अनित्या हि भगवता सर्वे संस्कारा निर्दिष्टास्ते स्वभावनित्यत्वात् नित्या हि भवन्ति।(५६)

**एष चाकुशलेष्वव्याकृतेषु नैर्याणादिषु च दोषः (।)**
**तस्मात् सर्वं संस्कृतमसंस्कृतं ते भवत्येवं।(५७)**

यश्चैष(:)कुशलेषु निर्दिष्टः क[६]ल्पः स एवाकुशलेषु स एवाव्याकृतेषु स एव नैर्याणिकप्रभृतिषु दोषः(।) तस्मात् [ति] सर्वमिदं संस्कृतमसंस्कृतं संपद्यते। किं कारणं (।) हेतो(?तौ) ह्यसत्युत्पादस्थितिभङ्गा न भवंति। उत्पादस्थितिभङ्गेष्वसत्सु[४] संस्कृतलक्षणाभावात्। सर्वं संस्कृतमसंस्कृतं संपद्यते।(५७)

तत्र यदुक्तं(।)कुशलादीनां भावानां स्वभावसद्भावादशून्याः सर्वभावा इति तन्न॥

## *(२) निर्वस्तुकस्य नामाभावे न नियमः*

यत्पुनर्भवतोक्तं।
यदि च न भवेत् स्वभावो भावानां न स्वभाव[५] इ[७]त्येवं (।)
नामापि भवेदेवं नाम हि [६]निर्वस्तुकं नास्ति।(९)
(?अत्रोच्यते)

---

[१] VT. Omits—सत्य ० धिगम्यन्ते [२] VT. Omits को
[३] VT. प्रसज्येत सिद्धान्तविरोधः [४] VT. ० भङ्गाभावात् तदभावे
[५] VT. धर्माणां निःस्वभाव
[६] In The verse 9—नामापि भवेन्नैवं नामापि

**यः सद्भूतं नाम ब्रूयात् स स्वभाव इत्येवं।**
**भवता प्रतिवक्तव्यो नाम ब्रूमश्च न वयं सत्। (५८)**

यो नाम सद्भूतं ब्रूयात् सस्वभाव इति स भवता प्रतिवक्तव्यः स्यात्। यस्य सद्भूतनामस्वभावस्य। तस्मात् तेनापि स्वभावेन सद्भूतेन भवितव्यं। न ह्यसद्भूतस्य स्वभावस्य सद्भूतं नाम भवतीति। न पुनर्वयं नाम सद्भूतं[1] ब्रूमस्तदपि हि स्वभावस्याभावान्नाम निः[8]स्वभावत्वात् शून्यं शून्यत्वादसद्भूतं।(५८)　b6

तत्र यत् भवतोक्तं नामसद्भावात् सद्भूतः स्वभाव इति। तन्न॥

किञ्चान्यत्।

**नामासदिति च[2] यदिदं तत्किं नु सतो भवत्युतासतः।**
**यदि हि सतो यद्यसतो द्विधापि ते हीयते वादः। (५९)**

यच्चैतन्नामासदिति[3] तत्किं [नाम] सतः असतः[4]। यदि हि सतस्त(त्) नाम यद्यसत उभयथापि प्रतिज्ञा हीयते। तत्र यदि तावत् सत्। [5]असदिति [नास्तीति] प्रतिज्ञा हीयते। नहीदानीं तदसदिदानीं सत्[1] अथासत्। असदिति नाम या प्रतिज्ञा असद्भूतस्य नाम न भवति अस्तित्वस्वभाव इति तस्मात् सद्भूतः स्वभाव इति। सा हीना॥(५९)

किञ्चान्यत्।

**सर्वेषां भावानां शून्यत्वञ्चोपपादितं पूर्वं।**
**स उपालम्भः तस्माद् भवत्ययञ्चाप्रतिज्ञायाः[6]।(६०)**

इह चास्माभिः पूर्वमेव सर्वेषां भावानां विस्तरतः शून्यत्वमुपपादितं। तत्र प्राग् नाम्नोपि शून्यत्वमुक्तं (।) संभवं अशून्यत्वं परिगृह्य परिवृत्तो[2] वक्तुं। यदि भावानां स्वभावो न स्यादस्वभाव इति नामापीदन्न स्यादिति।[7] तस्माद्(? त्) प्रतिज्ञोपलम्भोयं भवतः संपद्यते। न हि वयं नाम सद्भूतमिति ब्रूमः॥(६०)

---

[1] VT. ० सद्भूतस्वभावं　[2] VT. नामा सदि न
[3] VT. यच्चैतन्न नामासत इति
[4] VT. असतो वा। अथ
[5] VT. ० तावन्नामासद् (।)
[6] VT. तस्मात् प्रतिज्ञाऽभावेऽप्युपालम्भो योऽस्ति
[7] VT. Omits—संभवं ० स्यादिति

## (३) प्रतिषेधासिद्धिर्न युक्ता

### (क) धर्मविनिर्मुक्तः स्वभावः प्रतिषिद्धः

यत्पुनः भवतोक्तं।

अथ विद्यते स्वभावस्स च धर्माणां न विद्यते तस्मात् (।)

धर्मैर्विना स्वभावः स यस्य तत् युक्तमुपदेष्टुं।(१०)

(अत्रोच्यते)

**अथ विद्यते स्वभावः स च धर्माणां न विद्यत इति।**

**इदमाशङ्कितं यदुक्तं भवत्यनाशङ्कितं तच्च।(६१)**

न हि वयं धर्माणां स्वभावं[3] प्रतिषेधयामः। धर्मविनिर्मुक्तस्य वा कस्यचिदर्थस्य स्वभावमभ्युपगच्छामः। नन्वेवं सति य उपालम्भो भवत[ो] यदि धर्मा निःस्वभावाः कस्य खल्विदानीमन्यस्यार्थस्य धर्मविनिर्मुक्तस्य स्वभावो भवति। स युक्तमेवोपदिष्टमिति। दूरापकृष्टमेवैतत् भवति।[१] (६१)

### (ख) असतोऽपि अनभ्युपगमस्य प्रतिषेधात् समः

यत् पुनर्भवतोक्तं।

सत एव प्रतिषेधो नास्ति घटो गेह इत्ययं यस्मात्।

दृष्टः प्रतिषेधोयं सतः स्वभावस्य ते तस्मात्।(११)

इत्यत्र ब्रूमः।[4]

**सत एव प्रतिषेधो यदि शून्यत्वं नन्वप्रतिसि(?षि)द्धमिदं।**

**प्रतिषेधयते हि भवान् भावानां निःस्वभावत्वं।(६२)**

यदि सत एव प्रतिषेधो भवति नासत [ः। सर्व]भावानां निःस्वभावत्वं प्रतिषेधयति [भवान्]। ननु प्रतिसि(?षि)द्धं[२] सर्वभावानां निःस्वभावत्वं त्वद्वचनेन। प्रतिषेधयसि त्वं सद्भावात्। निःस्वभावत्वस्य च सर्वभावानां प्रतिषिद्धत्वात्। प्रतिषिद्धा शून्येति[३] (।६२)

---

[१] VT. दूरापकृष्टो न दृढस्स उपालम्भो भवति

[२] VT. न प्रसिद्धं

[३] VT. प्रतिसिद्धं त्वया शून्यता हेतोः प्रतिषिद्धत्वात् सर्वभावानां निःस्वभावत्वस्व च प्रतिषिद्धत्वाच्च

**प्रतिषेधयसे अथ त्वं शून्यत्वं तच्च नास्ति शून्यत्वं ।**
**प्रतिषेधः [5] सत इति ते नन्वे (वं) विहीयते वादः।[१] (६३)**

अथ[२] शून्यत्वं प्रतिषेधयसि त्वं सर्वभावानां निःस्वभावत्वं शून्यत्वं (।) नास्ति तच्च शून्यत्वं।[३] या तर्हि ते प्रतिज्ञा सतः प्रतिषेधो भवति नासत इति सा हीना॥(६३)

किञ्चान्यत्।

**प्रतिषेधयामि नाहं किञ्चित् प्रतिषेध्यमस्ति न च किञ्चित्।**
**तस्मात् प्रतिषेधयसीत्यधिलय[४] एव त्वया क्रियते।(६४)**

एवमपि तु कृत्वा यद्यहं किञ्चित् प्रतिषेधयामि ततो युक्तमेव वक्तुं स्यात्। न चैवाहं[6] किञ्चित् प्रतिषेधयामि तस्मान्न[५] किञ्चित् (प्रति)शे(?षे)द्धव्य-मस्ति। तस्मात् शून्येषु सर्वभावेष्वविद्यमाने प्रतिषेध्ये [प्रतिषेधे च] प्रतिषेधयसीत्येष त्वयात्र सद्भूतोऽधिलयः[६] क्रियत इति ॥(६४)

यत् पुनर्भवतोक्तं।

अथ नास्ति स स्वभावः किन्नु प्रतिषिध्यते त्वयानेन (।)
वचनेनर्ते वचनात् प्रतिषेधः सिध्यते ह्यसतः॥ (१२)

अत्र ब्रूमः।

**यच्चाहं ते वचनादसतः प्रतिषेधवचनसिद्धिरिति।**
**अत्र ज्ञापयते वागसदिति तन्न प्रतिनिहन्ति।(६५)**

यच्च भवान्[7] ब्रूवीति। सतो[७]पि वचनादसतः प्रतिषेधः प्रतिसिद्धः[८] तत्र किन्निःस्वभावाः सर्वभावा इति एतद्वचनं करोतीति॥

अत्र ब्रूमः(।)निःस्वभावा[ः सर्वभावा] इति एतत् खलु वचनं न निःस्वभा-वान् सर्वभावान् करोति[९]। किन्त्वसत्स्वभावो भावानामसत्स्वभावानामिति

---

[१] VT. इति ननु स हीयते वादः　　[२] VT. यस्मात्
[३] VT. adds अथ　[४] VT. ब्कुर्-प=पूजा
[५] VT. यस्मान्न
[६] VT. ब्कुर्-प थोग्-तु मि·बब्·प दे=न्यस्तस्सोऽधिलयः
[७] VT. असतोऽपि　　[८] VT. प्रसिद्धः
[९] VT. एतत् खलु वचनं भावानां निःस्वभावत्वं न करोति

ज्ञापयति। तत्र कश्चिद् ब्रूयादविद्यमानगृहे देवदत्तस्तमस्ति (? त्तेतमस्ति) गृहे देवदत्त
72a इति।[1] तत्रैनं[1] [? वं] कश्चित् प्रतिब्रूयात् [देवदत्तो गेहे] नास्तीति। न त[द्वचनं
देवदत्तस्याभावं करोति न] [4]देवदत्तस्य संभवं करोति। किन्तु ज्ञापयति
केवलमसद्भावं गृहे देवदत्तस्येति। तद्वत् नास्ति स्वभावो भावानामित्येतद् वचनं
न स्वभावानां[2] निः स्वभावत्वं करोति। भावेषु स्वभावस्याभावं ज्ञापयति[3]॥ (६५)

तत्र यद्भवतोक्तं (।) किमसति स्वभावे नास्ति स्वभाव इत्येतद् वचनं
करोति। रि (? ऋ) तेपि वचनात् प्रसिद्धिः स्वभावस्याभाव इति। तत् ते न
युक्तं (।)

## (ग) प्रतीत्यसमुत्पन्नत्वात् न निर्हेतुकतादोषः

यदुक्तं (।)

बालानामिव मृगतृष्णायां स यथा[1] जलग्राहः।
एवं मिथ्याग्राहः स्यात् ते प्रसिध्यते ह्यसतः। (१३-१६)
यत् पुनर्भवतो मृगतृष्णायामित्यत्र ब्रूमः।

**मृगतृष्णादृष्टान्ते यः पुनरुक्तं त्वया महांश्चर्चः।**
**तत्रापि निर्णयं शृणु यथा स दृष्टान्त उपपन्नः। (६६)**

य एव त्वया मृगतृष्णादृष्टान्ते महांश्चर्च उक्तः। तत्रापि यः निर्णयः स श्रूय-
तां (।) उपपन्न एव दृष्टान्तो भवति।[4] (६६)

**स यदि स्वभावतः स्यात् भावो[5] न स्यात् प्रतीत्य समुद्भूतः (।)[2]**
**यश्च प्रतीत्य भवति ग्राहो ननु[6] शून्यता सैव। (६७)**

यदि च मृगतृष्णायां स यथा जलग्राहः स्वभावतः स्यात्। न स्यात् प्रतीत्य-
समुत्पन्नो। यतो मृगतृष्णाञ्च प्रतीत्य विपरीतञ्च दर्शनं प्रतीत्य [अ]योनिशो मन-
स्कारञ्च प्रतीत्य स्यादुद्भूतोतः प्रतीत्यसमुत्पन्नः[7] (।) यतश्च प्रतीत्यसमुत्पन्नोऽतः
स्वभावतः शून्य एव। यथा पूर्वमुक्तं तथा (।६७)

---

[1] VT. यथा [2] VT. उक्तः। ० तत्रापि दृष्टान्तः स कथमुपपन्नः।
निर्णयो योऽस्ति सश्रूयताम्। [3] VT. भावानां [4] VT. ० करोति।
अथापि सर्वभावा निःस्वभावा मायापुरुषवत्। अभूतवस्तुमोहात् अविद्यया मूढान्
वालपुरुषान् आरोपितेषु सस्वभावेषु स्वभावाभावं ज्ञापयति। [5] VT.
ग्राहो [6] VT. न [7] VT. ० प्रतीत्यास्त्युद्भूतः

किञ्चान्यत् ।

**यदि च स्वभावतः स्यात् ग्राहः कस्तं विनिवर्तयेत् ग्राहं ।[3]**
**शे(षे)ष्वप्येष विधिः तस्मा(द्) दोषोनुपालम्भः[१] ।(६८)**

यदि च मृगतृष्णायां जलग्राहः स्वभावतः स्यात्। क एव तं विनिवर्तयेत्। न हि स्वभाव(:) शक्यो निवर्तयितुं। तथा[२]ग्नेरुष्णत्वमपाम् द्रवत्वमाकाशस्य निरव(?रा)वरणत्वं(।) दृष्टं चास्य विनिवर्तनं। तस्माच्छून्यस्वभावः ग्राह्यः[३]। यदा चैतदेवं शेषेष्वपि धर्मेष्वेष क्रमः प्रत्यवगन्तव्यः(।) ग्राह्यप्रवृत्तिषु पञ्चषु(?सु)।(६८)

तत्र यद् भव[तोक्तं—षट्लक्षणभा] [4]वादशून्याः सर्वभावा इति (।) तन्न॥

यत्पुनर्भवतोक्तं[४] ।

हेतोश्च ते न[४] सिद्धि (र्) नैःस्व(ा)भाव्यात् कुतो हि ते हेतुः(।)
निर्हेतुकस्य सिद्धिर्न चोपपन्नास्य तेऽर्थस्य इति ॥ (१७–१९)

अत्र ब्रूमः ।

**एतेन हेत्वभावः प्रत्युक्तः पूर्वमेव स समत्वात्[५] ।**
**मृगतृष्णादृष्टान्तव्यावृत्तिविधौ[६] य उक्तः प्राग् ।(६९)**

एतेनैव चेदानीं चर्चेन पूर्वोक्तेन हेत्वभावोपि प्रत्यवगन्तव्यः। य एव हि चर्चः पूर्वस्मिन् हेतावुक्तः षट्कप्रतिषे[धचर्चो यः स इ][5]हापि चर्चयितव्यः।(६९)

## *(४) प्रतिषेधप्रतिषेध्याभ्युपगमाददोषः*

यत्पुनर्भवतोक्तं[७] ।

पूर्वं चेत् प्रतिषेधः पश्चात् प्रतिषेध्यमित्यनुपपन्नं।
पश्चाच्चानुपपन्नो युगपच्च यतः स्वभावोऽसन् ॥(२०)

अत्र ब्रूमः ।

**यस्त्रैकाल्ये हेतुः प्रत्युक्तः पूर्वमेव स समत्वात् ।**
**त्रैकाल्यप्रतिहेतुश्च शून्यतावादिनां प्राप्तः ।(७०)**

---

[१] VT. **तस्मादनुपालम्भः**  [२] VT. **यथा**  [३] VT. **तस्मान्निःस्वभावो ग्राहः। यथा**  [४] VT. **अन्यच्च** verse–17 **हेतोस्ततो न०**  [५] VT. **साध्यसमत्वात्**  [६] VT. **० व्यावृत्तिसिद्धौ**  [७] VT. **अन्यच्च**

य एष हेतुः त्रैकाल्ये प्रतिषेधवाची स तूक्तोत्तरः प्रत्यवमन्तः[१]। कस्मात् (।) साध्यसमत्वात्। यथा हि[२] प्रतिषेधस्त्रैकाल्ये नोपप[न्नः स] [6]प्रतिषेधप्रतिषेधेपि।[३] तस्मात् प्रतिषेधप्रतिषेध्येऽसति [यद्] भवान् मन्यते प्रतिषेधः प्रतिसि(?षद्ध) इति(।) तन्न। यतश्चैष[४] त्रिकालप्रतिषेधवाची हेतुरेष एव शून्यतावादिनां प्राप्तः सर्वभावस्वभावप्रतिषेधकत्वान्न[५] भवतः।

अथवा कथमेतदुक्तोत्तरं।

प्रतिषेधयामि नाहं किञ्चित् प्रतिषेध्यमस्ति न च किञ्चत्।

तस्मात् प्रतिषेधयसीत्यधिलय एष त्वया क्रियत इति ॥(६४)

[प्रतिषेधः सिद्धः] अथ मन्यसे त्रिष्वपि कालेषु [7]दृष्ट[:] पूर्वकालीनोपि हेतुः उत्तरकालीनोपि। युगपत्कालीनोपि हेतुः (।) कथं पूर्वकालीनः[६]। यथा पिता पुत्रस्य त्वद्वचनेन[७] पश्चात्कालीनः। यथा शिष्या (?ष्य आ)चार्यस्य (।) युगपत्कालीनः यथा प्रदीप(:) प्रकाशस्येति ॥(७०)

अत्र ब्रूमः। न चैतदेव युक्ता ह्येतस्मि त्रयः पूर्वदोषाः[८]।

अपि च पुनः यद्येवं क्रमः[९]। प्रतिषेधसद्भावत्वे याभ्युपगम्यते[१०]। प्रतिज्ञा-

7b हानिश्च ते भवति[। एतेन क्रमेण][8]स्वभावप्रतिषेधोऽ[पि सिद्धः।]

**प्रभवति च शून्यतेयं यस्य प्रभवन्ति तस्य सर्वार्थाः (।)**

**प्रभवति न तस्य किन्न[११] भवति शून्यता यस्येति ॥(७१)**

यस्य शून्यतेयं प्रभवति तस्य सर्वार्थाः लौकिकलोकोत्तराः प्रभवन्ति (।) किं कारणं। यस्य हि शून्यता प्रभवति तस्य प्रतीत्यसमुत्पादः प्रभवति। यस्य प्रतीत्यसमुत्पादः प्रभवति तस्य[१२] चत्वा(र्या)र्यसत्यानि प्रभवंति। यस्य चत्वार्यार्य-सत्यानि[१३] श्रा[1]मण्यफलानि भवन्ति। सर्वविशेषाधिगमाः भवन्ति। यस्य सर्वविशे-षाधिगमाः प्रभवन्ति। तस्य त्रीणि रत्नानि बुद्धधर्मसंघाः प्रभवन्ति। यस्य प्रतीत्य-

---

[१] VT. Omits प्रत्यवमन्तः　[२] VT. एवं त्वद्वचनेन　[३] VT. नोपपन्नः प्रतिषेधवत् प्रतिषेध्योऽपि स स्यात्　[४] VT. यश्च　[५] VT. ० भावप्रतिषेध०　[६] VT. तत्र पूर्वं ० हेतुः　[७] VT. Omits—त्वद्वचनेन　[८] VT. नैतदेवम्। एतस्मिन् क्रमे पूर्वोक्ता दोषाः　[९] VT. Omits क्रमः　[१०] VT. प्रतिषेधभावो भवताऽभ्युपगम्यते। सा ह्यसिद्धतः　[११] VT. किञ्चिन्न　[१२] VT. Omits यस्य ० भवति　[१३] VT. प्रभवंति। ० सत्यानि

समुत्पादः प्रभवति तस्य धर्मो धर्महेतुर्धर्मफलञ्च प्रभवति[१]। तस्याधर्मोऽधर्म-हेतुरधर्मफलञ्च प्रभवति। तस्य क्लेशः क्लेशसमुदयः क्लेशवस्तुनो[२] च प्रभवान्ति। यस्यैतत् सर्वं भवति पूर्वोक्तं तस्य सुगतिदुर्गतिव्यवस्थ[ा] सु[2] गतिदुर्गतिगमनं। सुगतिदुर्गतिगामी मार्गः[३]। सुगतिदुर्गतिगमनव्यतिक्रमणं सुगतिदुर्गतिव्यतिक्रमोपायः सर्वसंव्यवहाराश्च लौकिकाः स्वयमधिगन्तव्याः (।) अनया दिशा किञ्चित् शक्यं वचनो(?नमु)पदेष्टुमिति। भवति[४] चात्र(।७१)

यः शून्यतां प्रतीत्यसमुत्पादं मध्यमां प्रतिपदमनेकार्थं[५]।
निजगाद प्रणमामि तमप्रतिमसंबुद्धमिति ॥[६] (७२)

कृतिरियमाचार्यनागार्जुनपादान(ां .........[3] एकत्र श्लोकशत ४५०॥

॥ लिखितमिदं श्रीधर्मकीर्तिना सर्वसत्वहेतोः यथालब्धमिति[७] ॥

॥विग्रहव्यावर्त्तनी॥[४०]

---

[१] VT. Omits प्रभवति  [२] VT. क्लेशवस्तूनि  [३] VT. प्राणी
[४] VT. Omits भवति  [५] VT. ० पदमेकार्थां  [६] VT. विग्रहव्यावर्त्तनि-प्रकरणटीकायाः प्रथमप्रमोदावतारः आचार्यनागार्जुनेन कृतः समाप्तः।

भारतीयपण्डितेन ज्ञानगर्भेण लोकचक्षुषा वन्द्यरक्षितेनानूदितः।

The colophon. of the kārikās is: विग्रहव्यावर्तनीकारिका नाम आचार्येणार्यनागार्जुनेन मानकलशेन (शल्-सुङ) कृता समाप्ता।

(१) भारतीयपण्डितेन ज्ञानगर्भेण (874 A.C.) भोटलोकचक्षुषा कवा(भिजनेन) श्रीकूटेन चानूदितः। (२) पुनः कश्मीरकपण्डितेन जयानन्तेन (1060 A.C.?) लोकचक्षुषा खु(वास्ताव्येन) सूत्रश्रिया चानूदितः।

[७] तत्रैव भोटभाषायां—"स्लोब-द्पोन्-क्लु-ग्रुब्-ग्यिस् म्जद्-प छिग्स्-सु ब्चद्-प ब्शि-ब्र्ग्य-ल्ङ-ब्चु-प।" (=आचार्यनागार्जुनकृता सार्द्धचतुःशतिका कारिका)

# APPENDIX I

## विग्रहव्यावर्त्तनी कारिकाप्रतीकानुक्रमणी

## APPENDIX II

# नामानुक्रमणी

# APPENDIX III

# PUBLICATIONS

*of*

## The Bihar and Orissa Research Society

1. A Descriptive Catalogue of Manuscripts in Mithila

*By*

*Kashi Prasad Jayaswal, M. A. (Oxon.), Vidyāmahodadhi*

*and*

[illegible]

Vol. II Literature, Prosody and Rhetoric Manuscripts

*By K. P. Jayaswal*

**Price Rs. 3**

2. Pārijātaharaṇa Nāṭaka of Umāpati Upādhyāya

*Edited and Translated by Sir George Grierson*
*O. M., K. C. I. E., I. C. S. (Retired)*

**Price Rs. 5**

*To be had of—*

**The Bihar and Orissa Research Society, Patna**

---

1. Journal of Francis Buchanan (afterwards Hamilton) Patna and Gaya in 1811-12

*Edited with Notes and Introduction by V. H. Jackson*

**Price Rs. 10**

2. Journal of Francis Buchanan Shahabad in 1812-13

*Edited with Notes and Introduction by*
*C. E. A. W. Oldham, C.S.I.*

**Price Rs. 10**

*To be had of—*

**The Bihar and Orissa Research Society, Patna**

## PRIVILEGES OF AN ORDINARY MEMBER

1. To be present at all ordinary meetings, which are held twice a year, and at the annual general meeting held in the month of February or March.
2. To propose and second candidates for ordinary membership.
3. To introduce visitors at any meeting of the Society.
4. To receive free of cost copies of the Journal, fascicule, etc., issued by the Society after the date of his election.

The annual subscription for an ordinary member, residing within the provinces of Bihar and Orissa, is Rs. 12 and for others Rs. 10, which is due on election (unless such election takes place on or after the 1st of July in which case half subscription only will have to be paid for that year, or on or after the 1st of December, in which case no subscription will have to be paid for that year), and on the 1st of January in each succeeding year. A member may at any time compound his future subscription by the payment of Rs. 180 in the case of a resident within the provinces of Bihar and Orissa, and Rs. 150 in the case of others.

*N.B.*—**All communications respecting this Journal should be addressed to—**

A. BANERJI-SASTRI
M.A. (Cal.), D. Phil. (Oxon.)
*Bihar and Orissa Research Society, Patna Museum Buildings*
*Patna (Bihar)*

ALLAHABAD LAW JOURNAL PRESS, ALLAHABAD
PRINTER—M. N. PANDEY